न गुरोरधिकं न गुरोरधिकं न गुरोरधिकं न गुरोरधिकं ।
न गुरोरधिकं न गुरोरधिकं न गुरोरधिकं न गुरोरधिकं ॥



தெளிவு குருவின் திருமேனி காண்டல்
தெளிவு குருவின் திருநாமம் செப்பல்
தெளிவு குருவின் திருவார்த்தை கேட்டல்
தெளிவு குருவுரு சிந்தித்தல் தானே!



॥ श्री वीरभद्र श्री पादुकां पूजयामि नमः ॥

## Table of Contents:

॥ शिवादि श्री गुरुभ्यो नमः ॥

# Introduction

In this issue the mantra japa, AvaraNa japa, daNDakam, sahasraNama, and rahasya mALAmantrA of aghOra vIrabhadra swami is included. vIrabhadra mahimA is included in various purANAs and itihAsAs. vIrabhadrA ArAdhanA is very popular in southern India. While vIrabhAdra mUrti is found in various temples as parivAra dEvatA, the popularity of the diety is understood by the existence of several temples in south India where vIrabhadrA is found as the primary diety. vIrabhadrA is also a key AmnAya dEvatA in the ShaDAmnAyA kramA of lalitAmbA.

We hope that this issue will be a good addition of your spiritual collection.

Lalithai vEdam sarvam. ©

Surrendering to the holy pAdukAs of Shri Guru,

प्रकाशाम्बा समेत प्रकाशानन्दनाथ

## पर्वा दिनेभ्यः

| | America | India |
|---|---|---|
| अमावास्या | 4 Feb 2019 | 4 Feb 2019 |
| मास सङ्क्रान्ति | 12 Feb 2019 | 13 Feb 2019 |
| पूर्णिमा | 18 Feb 2019 | 19 Feb 2019 |
| कृष्ण अष्टमि | 25 Feb 2019 | 26 Feb 2019 |
| कृष्ण चतुर्दशि | 4 Mar 2019 | 5 Mar 2019 |
| अमवास्या | 6 Mar 2019 | 6 Mar 2019 |

## अन्य पूजा दिनेभ्यः

| | America | India |
|---|---|---|
| शुक्ल चतुर्थि | 8 Feb 2019 | 9 Feb 2019 |
| कृष्ण चतुर्थि | 22 Feb 2019 | 23 Feb 2019 |

## विशेष पर्वा दिनेभ्यः

| | America | India |
|---|---|---|
| mAgha NavarAti begins | 4 Feb 2019 | 4 Feb 2019 |
| Ratha Saptami | 11 Feb 2019 | 12 Feb 2019 |
| mAsi magham | 19 Feb 2019 | 19 Feb 2019 |
| mahA shivarAtri | 4 Mar 2019 | 4 Mar 2019 |
| | | |



॥ श्री वीरभद्र श्री पादुकां पूजयामि नमः ॥

## श्री अघोर वीरभद्र मन्त्र जप क्रमः

अस्य श्री अघोर वीरभद्र महामन्त्रस्य ।
ब्रह्मा ऋषिः । अनुष्टुप् छन्दः । वीरभद्रो देवता ।

श्री वीरभद्र प्रसाद सिद्ध्यर्थे जपे विनियोगः ।

**कर न्यासः –**

ॐ ह्रौं वीरभद्राय अङ्गुष्ठाभ्यां नमः ।
अतिक्रूराय तर्जनीभ्यां स्वाहा ।
रुद्रकोपसंभवाय मध्यमाभ्यां वषट् ।
सर्वदुष्ट अनामिकाभ्यां हुं ।
निबर्हणाय कनिष्ठिकाभ्यां वौषट् ।
हुं फट् स्वाहा करतलकरपृष्ठाभ्यां फट् ।

**अङ्ग न्यासः –**

ॐ ह्रौं वीरभद्राय हृदयाय नमः ।
अतिक्रूराय शिरसे स्वाहा ।
रुद्रकोपसंभवाय शिखायै वषट् ।
सर्वदुष्ट कवचाय हुं ।
निबर्हणाय नेत्रत्रयाय वौषट् ।
हुं फट् स्वाहा अस्त्राय फट् ।

ॐ भुर्भुवस्वरों इति दिग्बन्धः ।

**ध्यानम् –**

गोक्षीराभं दधानं परशुडमरुकौ खड्गखेटौ कपालं
शूलं चाभीतिदाने त्रिनयनलसितं व्याघ्रचर्माम्बराढ्यम् ।
वेतालारुढमुग्रं कपिशतरजटाबद्धशीतांशुखण्डं
ध्यायेद्योगीन्द्रभूपं निजगणसहितं सन्ततं वीरभद्रम् ॥

**अन्य ध्यानम् –**

रुद्रं रौद्रावतारं हुतवहनयनं च ऊर्ध्वकेशं सुदंष्ट्रं
व्योमाङ्गं भीमरूपं किणिकिणिरबसज्वालामाला वृताङ्गम् ।
भूतप्रेताधिनाथं करकमलयुगे खड्गपात्रे वहान्तं
वन्दे लोकैकवीरं त्रिभुवनविनुतं श्यामलं वीरभद्रम् ॥

**पञ्चपूजा –**

लं पृथिव्यात्मने गन्धं कल्पयामि ।
हं आकाशात्मने पुष्पाणि कल्पयामि ।
यं वाय्वात्मने धूपं कल्पयामि ।
रं अग्न्यात्मने दीपं कल्पयामि ।
वं अमृतात्मने नैवेद्यं कल्पयामि ।
सं सर्वात्मने ताम्बूलादि समस्तोपचारान् कल्पयामि ।

**मन्त्रः –**

ॐ ह्रौं वीरभद्रायातिक्रूराय रुद्रकोपसंभवाय सर्वदुष्टनिबर्हणाय हुं फट् स्वाहा ।

**अन्य मन्त्रः –**

ॐ नमो वीरभद्राय वैरी नाशाय सर्वलोकभयङ्कराय भीमवेशाय हूं फट् विजयाय ह्रीं खं फट् रिपून् हुं फट् स्वाहा ।

**अङ्ग न्यासः –**

ॐ ह्रौं वीरभद्राय हृदयाय नमः ।
अतिक्रूराय शिरसे स्वाहा ।
रुद्रकोपसंभवाय शिखायै वषट् ।
सर्वदुष्ट कवचाय हुं ।
निबर्हणाय नेत्रत्रयाय वौषट् ।
हुं फट् स्वाहा अस्त्राय फट् ।

ॐ भूर्भुवस्वरों इति दिग्विमोघः ।

**ध्यानम् –**

गोक्षीराभं दधानं परशुडमरुकौ खड्गखेटौ कपालं
शूलं चाभीतिदाने त्रिनयनलसितं व्याघ्रचर्माम्बराढ्यम् ।
वेतालारुढमुग्रं कपिशतरजटाबद्धशीतांशुखण्डं
ध्यायेद्योगीन्द्रभूपं निजगणसहितं सन्ततं वीरभद्रम् ॥

पञ्चपूजा –

लं पृथिव्यात्मने गन्धं कल्पयामि ।
हं आकाशात्मने पुष्पाणि कल्पयामि ।
यं वाय्वात्मने धूपं कल्पयामि ।
रं अग्न्यात्मने दीपं कल्पयामि ।
वं अमृतात्मने नैवेद्यं कल्पयामि ।
सं सर्वात्मने ताम्बूलादि समस्तोपचारान् कल्पयामि ।




॥ श्री वीरभद्र श्री पादुकां पूजयामि नमः ॥

# श्री अघोर वीरभद्र आवरण पूजा क्रमः

## पीठ पूजा –

वामायै नमः ।
ज्येष्ठायै नमः ।
रौध्र्यै नमः ।
काल्यै नमः ।
कलविकरण्यै नमः ।
बलविकरण्यै नमः ।
बलप्रमथिण्यै नमः ।
सर्वभूतदमन्यै नमः ।
मनोन्मन्यै नमः ।

ॐ नमो भगवते सकलगुणात्मकशक्तियुक्ताय अनन्ताय योगपीठात्मने नमः ।

## श्री अघोर वीरभद्र आवाहनम् –

गोक्षीराभं दधानं परशुडमरुकौ खड्गखेटौ कपालं
शूलं चाभीतिदाने त्रिनयनलसितं व्याघ्रचर्माम्बराढ्यम् ।
वेतालारुढमुग्रं कपिशतरजटाबद्धशीतांशुखण्डं
ध्यायेद्धोगीन्द्रभूपं निजगणसहितं सन्ततं वीरभद्रम् ॥

ॐ ह्रौं वीरभद्रायातिक्रूराय रुद्रकोपसंभवाय सर्वदुष्टनिबर्हणाय हुं फट् स्वाहा ।
वीरभद्रम् आवाहयामि नमः । आवाहन मुद्रां प्रदर्श्य ।
ॐ ह्रौं वीरभद्रायातिक्रूराय रुद्रकोपसंभवाय सर्वदुष्टनिबर्हणाय हुं फट् स्वाहा ।
स्थापिता भव । स्थापण मुद्रां प्रदर्श्य ।

ॐ ह्रौं वीरभद्रायातिक्रूराय रुद्रकोपसंभवाय सर्वदुष्टनिबर्हणाय हुं फट् स्वाहा ।
संस्थितो भव । संस्थित मुद्रां प्रदर्श्य ।
ॐ ह्रौं वीरभद्रायातिक्रूराय रुद्रकोपसंभवाय सर्वदुष्टनिबर्हणाय हुं फट् स्वाहा ।
सन्निरुद्ध भव । सन्निरुद्ध मुद्रां प्रदर्श्य ।
ॐ ह्रौं वीरभद्रायातिक्रूराय रुद्रकोपसंभवाय सर्वदुष्टनिबर्हणाय हुं फट् स्वाहा ।
सम्मुखी भव । सम्मुखी मुद्रां प्रदर्श्य ।
ॐ ह्रौं वीरभद्रायातिक्रूराय रुद्रकोपसंभवाय सर्वदुष्टनिबर्हणाय हुं फट् स्वाहा ।
अवकुण्ठितो भव । अवकुण्ठन मुद्रां प्रदर्श्य ।
ॐ ह्रौं वीरभद्रायातिक्रूराय रुद्रकोपसंभवाय सर्वदुष्टनिबर्हणाय हुं फट् स्वाहा । वीरभद्र श्री पादुकां पूजयामि नमः । वन्दन धेनु योनि मुद्राञ्श्च प्रदर्श्य ।
ॐ ह्रौं वीरभद्रायातिक्रूराय रुद्रकोपसंभवाय सर्वदुष्टनिबर्हणाय हुं फट् स्वाहा । श्री वीरभद्राय नमः । आसनं कल्पयामि नमः ।
ॐ ह्रौं वीरभद्रायातिक्रूराय रुद्रकोपसंभवाय सर्वदुष्टनिबर्हणाय हुं फट् स्वाहा । श्री वीरभद्राय नमः । पादयोः पाद्यं कल्पयामि नमः ।
ॐ ह्रौं वीरभद्रायातिक्रूराय रुद्रकोपसंभवाय सर्वदुष्टनिबर्हणाय हुं फट् स्वाहा । श्री वीरभद्राय नमः । हस्तयोः अर्घ्यं कल्पयामि नमः ।
ॐ ह्रौं वीरभद्रायातिक्रूराय रुद्रकोपसंभवाय सर्वदुष्टनिबर्हणाय हुं फट् स्वाहा । श्री वीरभद्राय नमः । मुखे आचमनीयं कल्पयामि नमः ।
ॐ ह्रौं वीरभद्रायातिक्रूराय रुद्रकोपसंभवाय सर्वदुष्टनिबर्हणाय हुं फट् स्वाहा । श्री वीरभद्राय नमः । शुद्धोदक स्नानं कल्पयामि नमः ।
ॐ ह्रौं वीरभद्रायातिक्रूराय रुद्रकोपसंभवाय सर्वदुष्टनिबर्हणाय हुं फट् स्वाहा । श्री वीरभद्राय नमः । स्नानानन्तरं आचमनीयं कल्पयामि नमः ।
ॐ ह्रौं वीरभद्रायातिक्रूराय रुद्रकोपसंभवाय सर्वदुष्टनिबर्हणाय हुं फट् स्वाहा । श्री वीरभद्राय नमः । वस्त्राणि कल्पयामि नमः ।
ॐ ह्रौं वीरभद्रायातिक्रूराय रुद्रकोपसंभवाय सर्वदुष्टनिबर्हणाय हुं फट् स्वाहा । श्री वीरभद्राय नमः । आभरणानि कल्पयामि नमः ।
ॐ ह्रौं वीरभद्रायातिक्रूराय रुद्रकोपसंभवाय सर्वदुष्टनिबर्हणाय हुं फट् स्वाहा । श्री वीरभद्राय नमः । दिव्यपरिमल गन्धं कल्पयामि नमः ।

ॐ ह्रौं वीरभद्रायातिक्रूराय रुद्रकोपसंभवाय सर्वदुष्टनिबर्हणाय हुं फट् स्वाहा । श्री वीरभद्राय नमः । गन्धस्योऽपरि हरिद्रा कुङ्कुमं कल्पयामि नमः ।
ॐ ह्रौं वीरभद्रायातिक्रूराय रुद्रकोपसंभवाय सर्वदुष्टनिबर्हणाय हुं फट् स्वाहा । श्री वीरभद्राय नमः । पुष्पाक्षतान् कल्पयामि नमः ।
ॐ ह्रौं वीरभद्रायातिक्रूराय रुद्रकोपसंभवाय सर्वदुष्टनिबर्हणाय हुं फट् स्वाहा । श्री वीरभद्राय नमः । धूपं कल्पयामि नमः ।
ॐ ह्रौं वीरभद्रायातिक्रूराय रुद्रकोपसंभवाय सर्वदुष्टनिबर्हणाय हुं फट् स्वाहा । श्री वीरभद्राय नमः । दीपं कल्पयामि नमः ।
ॐ ह्रौं वीरभद्रायातिक्रूराय रुद्रकोपसंभवाय सर्वदुष्टनिबर्हणाय हुं फट् स्वाहा । श्री वीरभद्राय नमः । नैवेद्यं कल्पयामि नमः ।
ॐ ह्रौं वीरभद्रायातिक्रूराय रुद्रकोपसंभवाय सर्वदुष्टनिबर्हणाय हुं फट् स्वाहा । श्री वीरभद्राय नमः । सुगन्ध ताम्बूलं कल्पयामि नमः ।
ॐ ह्रौं वीरभद्रायातिक्रूराय रुद्रकोपसंभवाय सर्वदुष्टनिबर्हणाय हुं फट् स्वाहा । श्री वीरभद्राय नमः । कर्पूर नीराञ्जनं कल्पयामि नमः ।
ॐ ह्रौं वीरभद्रायातिक्रूराय रुद्रकोपसंभवाय सर्वदुष्टनिबर्हणाय हुं फट् स्वाहा । श्री वीरभद्राय नमः । प्रदक्षिण नमस्कारान् कल्पयामि नमः ।

सन्विन्मये परे देवा परामृत रुचि प्रिय ।
अनुज्ञां वीरभद्रम् देहि परिवारार्चनाय मे ॥

## षडङ्ग तर्पणम् –

ॐ ह्रौं वीरभद्राय हृदयाय नमः । हृदय शक्ति श्री पादुकां पूजयामि तर्पयामि नमः ।
अतिक्रूराय शिरसे स्वाहा । शिरो शक्ति श्री पादुकां पूजयामि तर्पयामि नमः ।
रुद्रकोपसंभवाय शिखायै वषट् । शिखा शक्ति श्री पादुकां पूजयामि तर्पयामि नमः ।
सर्वदुष्ट कवचाय हुं । कवच शक्ति श्री पादुकां पूजयामि तर्पयामि नमः ।
निबर्हणाय नेत्रत्रयाय वौषट् । नेत्र शक्ति श्री पादुकां पूजयामि तर्पयामि नमः ।
हुं फट् स्वाहा अस्त्राय फट् । अस्त्र शक्ति श्री पादुकां पूजयामि तर्पयामि नमः ।

## लयाङ्ग तर्पणम् –

ॐ ह्रौं वीरभद्रायातिक्रूराय रुद्रकोपसंभवाय सर्वदुष्टनिबर्हणाय हुं फट् स्वाहा । श्री वीरभद्र श्री पादुकां पूजयामि तर्पयामि नमः । (१० वारम्)

## प्रथमावरणम् –

ॐ ह्रौं तत्पुरुषाय नमः । तत्पुरुष श्री पादुकां पूजयामि तर्पयामि नमः ।
ॐ ह्रौं अघोराय नमः । अघोर श्री पादुकां पूजयामि तर्पयामि नमः ।
ॐ ह्रौं सद्योजाताय नमः । सद्योजात श्री पादुकां पूजयामि तर्पयामि नमः ।
ॐ ह्रौं वामदेवाय नमः । वामदेव श्री पादुकां पूजयामि तर्पयामि नमः ।
ॐ ह्रौं ईशानाय नमः । ईशान श्री पादुकां पूजयामि तर्पयामि नमः ।

ॐ ह्रौं निवृत्यै नमः । निवृत्ती श्री पादुकां पूजयामि तर्पयामि नमः ।
ॐ ह्रौं प्रतिष्ठायै नमः । प्रतिष्ठा श्री पादुकां पूजयामि तर्पयामि नमः ।
ॐ ह्रौं विद्यायै नमः । विद्या श्री पादुकां पूजयामि तर्पयामि नमः ।
ॐ ह्रौं शान्तायै नमः । शान्ता श्री पादुकां पूजयामि तर्पयामि नमः ।
ॐ ह्रौं शान्त्यातीतायै नमः । शान्त्यातीता श्री पादुकां पूजयामि तर्पयामि नमः ।

ॐ एताः प्रथमावरण देवताः साङ्गाः सायुधाः सशक्तिकाः सवाहनाः सपरिवाराः सर्वोपचारैः सम्पूजिताः सन्तर्पिताः सन्तुष्टाः सन्तु नमः ।

ॐ ह्रौं वीरभद्रायातिक्रूराय रुद्रकोपसंभवाय सर्वदुष्टनिबर्हणाय हुं फट् स्वाहा । श्री वीरभद्र श्री पादुकां पूजयामि तर्पयामि नमः । (३ वारम्)

ॐ अभीष्टसिद्धिं मे देहि शरणागत वत्सल
भक्त्या समर्पये तुभ्यं प्रथमावरणार्चनम् ॥

## द्वितीयावरणम् –

ॐ ह्रौं वीरभद्राय हृदयाय नमः । हृदय शक्ति श्री पादुकां पूजयामि तर्पयामि नमः ।
अतिक्रूराय शिरसे स्वाहा । शिरो शक्ति श्री पादुकां पूजयामि तर्पयामि नमः ।
रुद्रकोपसंभवाय शिखायै वषट् । शिखा शक्ति श्री पादुकां पूजयामि तर्पयामि नमः ।
सर्वदुष्ट कवचाय हुं । कवच शक्ति श्री पादुकां पूजयामि तर्पयामि नमः ।
निबर्हणाय नेत्रत्रयाय वौषट् । नेत्र शक्ति श्री पादुकां पूजयामि तर्पयामि नमः ।
हुं फट् स्वाहा अस्त्राय फट् । अस्त्र शक्ति श्री पादुकां पूजयामि तर्पयामि नमः ।

ॐ एताः द्वितीयावरण देवताः साङ्गाः सायुधाः सशक्तिकाः सवाहनाः सपरिवाराः सर्वोपचारैः सम्पूजिताः सन्तर्पिताः सन्तुष्टाः सन्तु नमः ।

ॐ ह्रौं वीरभद्रायातिक्रूराय रुद्रकोपसंभवाय सर्वदुष्टनिबर्हणाय हुं फट् स्वाहा । श्री वीरभद्र श्री पादुकां पूजयामि तर्पयामि नमः । (३ वारम्)

ॐ अभीष्टसिद्धिं मे देहि शरणागत वत्सल
भक्त्या समर्पये तुभ्यं द्वितीयावरणार्चनम् ॥

## तृतीयावरणम् –

ॐ ह्रौं परशवे नमः । परशु श्री पादुकां पूजयामि तर्पयामि नमः ।
ॐ ह्रौं डमरुकाय नमः । डमरु श्री पादुकां पूजयामि तर्पयामि नमः ।
ॐ ह्रौं खड्गाय नमः । खड्ग श्री पादुकां पूजयामि तर्पयामि नमः ।
ॐ ह्रौं खेटाय नमः । खेट श्री पादुकां पूजयामि तर्पयामि नमः ।
ॐ ह्रौं कपालाय नमः । कपाल श्री पादुकां पूजयामि तर्पयामि नमः ।
ॐ ह्रौं शूलाय नमः । शूल श्री पादुकां पूजयामि तर्पयामि नमः ।
ॐ ह्रौं अभयाय नमः । अभय श्री पादुकां पूजयामि तर्पयामि नमः ।
ॐ ह्रौं वरदाय नमः । वरद श्री पादुकां पूजयामि तर्पयामि नमः ।

ॐ एताः तृतीयावरण देवताः साङ्गाः सायुधाः सशक्तिकाः सवाहनाः सपरिवाराः सर्वोपचारैः सम्पूजिताः सन्तर्पिताः सन्तुष्टाः सन्तु नमः ।

ॐ ह्रौं वीरभद्रायातिक्रूराय रुद्रकोपसंभवाय सर्वदुष्टनिबर्हणाय हुं फट् स्वाहा । श्री वीरभद्र श्री पादुकां पूजयामि तर्पयामि नमः । (३ वारम्)

ॐ अभीष्टसिद्धिं मे देहि शरणागत वत्सल
भक्त्या समर्पये तुभ्यं तृतीयावरणार्चनम् ॥

## तुरियावरणम् –

ॐ लं इन्द्राय नमः । इन्द्र श्री पादुकां पूजयामि तर्पयामि नमः ।
ॐ रं अग्नये नमः । अग्नि श्री पादुकां पूजयामि तर्पयामि नमः ।
ॐ टं यमाय नमः । यम श्री पादुकां पूजयामि तर्पयामि नमः ।
ॐ क्षं निऋतये नमः । निऋति श्री पादुकां पूजयामि तर्पयामि नमः ।
ॐ वं वरुणाय नमः । वरुण श्री पादुकां पूजयामि तर्पयामि नमः ।
ॐ यं वायवे नमः । वायु श्री पादुकां पूजयामि तर्पयामि नमः ।
ॐ कुं कुबेराय नमः । कुबेर श्री पादुकां पूजयामि तर्पयामि नमः ।
ॐ हौं ईशानाय नमः । ईशान श्री पादुकां पूजयामि तर्पयामि नमः ।
ॐ आं ब्रह्मणे नमः । ब्रह्म श्री पादुकां पूजयामि तर्पयामि नमः ।
ॐ ह्रीं अनन्ताय नमः । अनन्त श्री पादुकां पूजयामि तर्पयामि नमः ।

ॐ एताः तुरियावरण देवताः साङ्गाः सायुधाः सशक्तिकाः सवाहनाः सपरिवाराः सर्वोपचारैः सम्पूजिताः सन्तर्पिताः सन्तुष्टाः सन्तु नमः ।

ॐ ह्रौं वीरभद्रायातिक्रूराय रुद्रकोपसंभवाय सर्वदुष्टनिबर्हणाय हुं फट् स्वाहा । श्री वीरभद्र श्री पादुकां पूजयामि तर्पयामि नमः । (३ वारम्)

ॐ अभीष्टसिद्धिं मे देहि शरणागत वत्सल
भक्त्या समर्पये तुभ्यं तुरियावरणार्चनम् ॥

## पञ्चमावरणम् –

ॐ वं वज्राय नमः । वज्र श्री पादुकां पूजयामि तर्पयामि नमः ।
ॐ शं शक्तये नमः । शक्ति श्री पादुकां पूजयामि तर्पयामि नमः ।
ॐ दं दण्डाय नमः । दण्ड श्री पादुकां पूजयामि तर्पयामि नमः ।
ॐ खं खड्गाय नमः । खड्ग श्री पादुकां पूजयामि तर्पयामि नमः ।
ॐ पं पाशाय नमः । पाश श्री पादुकां पूजयामि तर्पयामि नमः ।
ॐ ध्वं ध्वजाय नमः । ध्वज श्री पादुकां पूजयामि तर्पयामि नमः ।
ॐ गं गदायै नमः । गदा श्री पादुकां पूजयामि तर्पयामि नमः ।
ॐ त्रिं त्रिशूलाय नमः । त्रिशूल श्री पादुकां पूजयामि तर्पयामि नमः ।
ॐ पं पद्माय नमः । पद्म श्री पादुकां पूजयामि तर्पयामि नमः ।
ॐ चं चक्राय नमः । चक्र श्री पादुकां पूजयामि तर्पयामि नमः ।

ॐ एताः पञ्चमावरण देवताः साङ्गाः सायुधाः सशक्तिकाः सवाहनाः सपरिवाराः सर्वोपचारैः सम्पूजिताः सन्तर्पिताः सन्तुष्टाः सन्तु नमः ।

ॐ ह्रौं वीरभद्रायातिक्रूराय रुद्रकोपसंभवाय सर्वदुष्टनिबर्हणाय हुं फट् स्वाहा । श्री वीरभद्र श्री पादुकां पूजयामि तर्पयामि नमः । (३ वारम्)

ॐ अभीष्टसिद्धिं मे देहि शरणागत वत्सल
भक्त्या समर्पये तुभ्यं पञ्चमावरणार्चनम् ॥



॥ श्री वीरभद्र श्री पादुकां पूजयामि नमः ॥

# श्री वीरभद्र दण्डकम्

श्री भद्र । भद्राम्बिकाप्राणनाथा । सुराराभिङ्गा । प्रभो ।
रुद्र । रौद्रावतारा । सुनासीर मुख्यामरानेक सम्भावितानल्प
सुश्लोकचारित्र । कोट्यर्कसङ्काश देदीप्यमानप्रभा । दिव्यगात्रा
शिवा । पालिताशेषब्रह्माण्डभाण्डोदरा । मेरुधीरा । विराड्रूप ।
वाराशिगम्भीर । सौजन्यरत्नाकरा । वारिदश्याम । नारायणध्येय
मौनीन्द्रचित्ताब्जभृङ्गा । सुराराभिङ्गा । महोदार ।
भक्तौघकल्पद्रुमा । शिष्टरक्षा । प्रशस्तप्रतापोज्ज्वला ।
श्रीकरा । भीकरा । भीकरालोक । चूर्णीकृतार्येषु दोर्दण्ड पाण्डित्य
संरम्भणोल्लास । राजत्कराम्भोज विन्यस्त खड्गत्रिशूलादिनानायुधा ।
भण्डनाचार्य । रुद्राक्षमालालसद्देह । रत्नाञ्चितानर्घ सौवर्ण
केयूर भास्वत् किरीटोत्तमाङ्गा । त्रिपुण्ड्राङ्क सर्वाङ्गसंशोभिता
चन्द्रकोटीर । हेमाम्बराडम्बरा । दैवचूडामणी । सन्तताखण्ड ।
दीर्घायुरारोग्यसौभाग्यसिद्धिप्रदा । देव । तापत्रयध्वान्तभानू ।
वियत्केश । मृत्युञ्जया । दीनचिन्तामणी । सर्वलोकेश । लोकात्म ।
लोकस्वरूपा । महायज्ञविध्वंसनाध्यक्ष । दाक्षायणीपुत्र ।
अक्षीणपुण्या । विभो । वीरभद्रा । महाकालरुद्रा । कृपामुद्र ।
मां पाहि दीनबन्धो । दयावारिराशी । लसच्चित्रभूषा ।
महादिव्यवेषा । हरा । भक्तपोषा । दयावार्थि । वीरेश्वरा ।
नित्यकल्याणसन्धानधौरेय । पापाटवी कील दावानला ।
पुण्यमूर्ते । नमस्ते नमस्ते नमस्ते नमः ॥

॥ इति श्री वीरभद्रदण्डकं सम्पूर्णम् ॥

## श्री वीरभद्र नक्षत्र नामावलिः

ॐ वीरभद्रेश्वराय नमः ।
ॐ वीरनाथाय नमः ।
ॐ वीरप्रभावकाय नमः । ३
ॐ उग्राय नमः ।
ॐ रथवाहनाय नमः ।
ॐ त्रिनेत्राय नमः । ६
ॐ त्रैलोक्यवासकाय नमः ।
ॐ देवदेवाय नमः ।
ॐ देवरक्षिणे नमः । ९
ॐ योगभद्राय नमः ।
ॐ पार्वतीप्रियपुत्राय नमः ।
ॐ पङ्कजप्रियाय नमः । १२
ॐ रौद्ररूपाय नमः ।
ॐ भक्तरक्षकाय नमः ।
ॐ शरभाय नमः । १५
ॐ शङ्खचक्रधराय नमः ।
ॐ धनुभृते नमः ।
ॐ खड्गहस्ताय नमः । १८
ॐ सर्वेश्वराय नमः ।
ॐ सर्पाभरणाय नमः ।
ॐ रक्तकेशाय नमः । २१
ॐ यागहन्त्रे नमः ।
ॐ वीणानाथाय नमः ।
ॐ सिंहासनाय नमः । २४
ॐ नन्दिगणाय नमः ।
ॐ नृसिंहसंहाराय नमः ।
ॐ श्रीवीरभद्राय नमः । २७



॥ श्री वीरभद्र श्री पादुकां पूजयामि नमः ॥

# श्री वीरभद्र सहस्रनामस्तोत्रम्

ॐ अस्य श्री वीरभद्र सहस्रनामस्तोत्र महामन्त्रस्य
नारायणऋषिः । अनुष्टुप्छन्दः । श्रीवीरभद्रोदेवता ।
श्रीं बीजम् । वीं शक्तिः । रं कीलकम् ॥

श्री वीरभद्र प्रसादसिद्ध्यर्थे जपे विनियोगः ।

**ध्यानम् –**

रौद्रं रुद्रावतारं हुतवहनयनं चोर्ध्वकेशं सुदंष्ट्रं
भीमाङ्गं भीमरूपं किणिकिणिरभसं ज्वालमालाऽऽवृताङ्गम् ।
भूतप्रेतादिनाथं करकमलमहाखड्गपात्रे वहन्तं
वन्दे लोकैकवीरं त्रिभुवननमितं श्यामलं वीरभद्रम् ॥

**पञ्चपूजा –**

लं पृथिव्यात्मने गन्धं कल्पयामि ।
हं आकाशात्मने पुष्पाणि कल्पयामि ।
यं वाय्वात्मने धूपं कल्पयामि ।
रं अग्न्यात्मने दीपं कल्पयामि ।
वं अमृतात्मने नैवेद्यं कल्पयामि ।
सं सर्वात्मने ताम्बूलादि समस्तोपचारान् कल्पयामि ।

## स्तोत्रम् –

शम्भुः शिवो महादेवो शितिकण्ठो वृषध्वजः ।
दक्षाध्वरकरो दक्षः क्रूरदानवभञ्जनः ॥ १॥

कपर्दी कालविध्वंसी कपाली करुणार्णवः ।
शरणागतरक्षैकनिपुणो नीललोहितः ॥ २॥

निरीशो निर्भयो नित्यो नित्यतृप्तो निरामयः ।
गम्भीरनिनदो भीमो भयङ्करस्वरूपधृत् ॥ ३॥

पुरन्दरादि गीर्वाणवन्द्यमानपदाम्बुजः ।
संसारवैद्यः सर्वज्ञः सर्वभेषजभेषजः ॥ ४॥

मृत्युञ्जयः कृत्तिवासस्त्र्यम्बकस्त्रिपुरान्तकः ।
वृन्दारवृन्दमन्दारो मन्दाराचलमण्डनः ॥ ५॥

कुन्देन्दुहारनीहारहारगौरसमप्रभः ।
राजराजसखः श्रीमान् राजीवायतलोचनः ॥ ६॥

महानटो महाकालो महासत्यो महेश्वरः ।
उत्पत्तिस्थितिसंहारकारणानन्दकर्मकः ॥ ७॥

सारः शूरो महाधीरो वारिजासनपूजितः ।
वीरसिंहासनारूढो वीरमौलिशिखामणिः ॥ ८॥

वीरप्रियो वीररसो वीरभाषणतत्परः ।
वीरसङ्ग्रामविजयी वीराराधनतोषितः ॥ ९॥

वीरव्रतो विराड्रूपो विश्वचैतन्यरक्षकः ।
वीरखड्गो भारशरो मेरुकोदण्डमण्डितः ॥ १०॥

वीरोत्तमाङ्गः शृङ्गारफलको विविधायुधः ।
नानासनो नतारातिमण्डलो नागभूषणः ॥ ११॥

नारदस्तुतिसन्तुष्टो नागलोकपितामहः ।
सुदर्शनः सुधाकायो सुरारातिविमर्दनः ॥ १२॥

असहायः परः सर्वसहायः साम्प्रदायकः ।
कामदो विषभुग्योगी भोगीन्द्राञ्चितकुण्डलः ॥ १३॥

उपाध्यायो दक्षरिपुः कैवल्यनिधिरच्युतः ।
सत्त्वं रजस्तमः स्थूलः सूक्ष्मोऽन्तर्बहिरव्ययः ॥ १४॥

भूरापो ज्वलनो वायुर्गगनं त्रिजगद्गुरुः ।
निराधारो निरालम्बः सर्वाधारः सदाशिवः ॥ १५॥

भास्वरो भगवान् भालनेत्रो भावजसंहरः ।
व्यालबद्धजटाजूटो बालचन्द्रशिखामणिः ॥ १६॥

अक्षय्यैकाक्षरो दुष्टशिक्षकः शिष्टरक्षितः ।
दक्षपक्षेषुबाहुल्यवनलीलागजो ऋजुः ॥ १७॥

यज्ञाङ्गो यज्ञभुग्यज्ञो यज्ञेशो यजनेश्वरः ।
महायज्ञधरो दक्षसम्पूर्णाहूतिकौशलः ॥ १८॥

मायामयो महाकायो मायातीतो मनोहरः ।
मारदर्पहरो मञ्जुर्महीसुतदिनप्रियः ॥ १९॥

सौम्यः समोऽसमोऽनन्तः समानरहितो हरः ।
सोमोऽनेककलाधामा व्योमकेशो निरञ्जनः ॥ २०॥

गुरुः सुरगुरुर्गूढो गुहाराधनतोषितः ।
गुरुमन्त्राक्षरगुरुः परः परमकारणम् ॥ २१॥

कलिः कलाढ्यो नीतिज्ञः करालासुरसेवितः ।
कमनीयरविच्छायो नन्दनानन्दवर्धनः ॥ २२॥

स्वभक्तपक्षः प्रबलः स्वभक्तबलवर्धनः ।
स्वभक्तप्रतिवादीन्द्रमुखचन्द्रवितुन्तुदः ॥ २३॥

शेषभूषो विशेषज्ञस्तोषितः सुमनाः सुधीः ।
दूषकाभिजनोद्भूतधूमकेतुस्सनातनः ॥ २४॥

दूरीकृताघपटलश्चोरीकृतसुखप्रजः ।
पूरीकृतेषुकोदण्डो निर्वैरीकृतसङ्गरः ॥ २५॥

ब्रह्मविद्ब्राह्मणो ब्रह्म ब्रह्मचारी जगत्पतिः ।
ब्रह्मेश्वरो ब्रह्ममयः परब्रह्मात्मकः प्रभुः ॥ २६॥

नादप्रियो नादमयो नादबिन्दुर्नगेश्वरः ।
आदिमध्यान्तरहितो वादो वादविदां वरः ॥ २७॥

इष्टो विशिष्टस्तुष्टघ्नः पुष्टिदः पुष्टिवर्धनः ।
कष्टदारिद्र्यनिर्नाशो दुष्टव्याधिहरो हरः ॥ २८॥

पद्मासनः पद्मकरो नवपद्मासनार्चितः ।
नीलाम्बुजदलश्यामो निर्मलो भक्तवत्सलः ॥ २९॥

नीलजीमूतसङ्काशः कालकन्धरबन्धुरः ।
जपाकुसुमसन्तुष्टो जपहोमार्च्चनप्रियः ॥ ३०॥

जगदादिरनादीशोऽजगवन्धरकौतुकः ।
पुरन्दरस्तुतानन्दः पुलिन्दः पुण्यपञ्जरः ॥ ३१॥

पौलस्त्यचलितोल्लोलपर्वतः प्रमदाकरः ।
करणं कारणं कर्म करणीयाग्रणीर्दृढः ॥ ३२॥

करिदैत्येन्द्रवसनः करुणापूरवारिधिः ।
कोलाहलप्रियः प्रीतः शूली व्यालकपालभृत् ॥ ३३॥

कालकूटगलः क्रीडालीलाकृतजगत्त्रयः ।
दिगम्बरो दिनेशेशो धीमान्धीरो धुरन्धरः ॥ ३४॥

दिक्कालाद्यनवच्छिन्नो धूर्जटिर्धूतदुर्गतिः ।
कमनीयः करालास्यः कलिकल्मषसूदनः ॥ ३५॥

करवीरोऽरुणाम्भोजकल्हारकुसुमार्पितः ।
खरो मण्डितदोर्दण्डः खरूपः कालभञ्जनः ॥ ३६॥

खरांशुमण्डलमुखः खण्डितारामतिण्डलः ।
गणेशगणितोऽगण्यः पुण्यराशी सुखोदयः ॥ ३७॥

गणाधिपकुमारादिगणकैरवबान्धवः ।
घनघोषबृहन्नादघनीकृतसुनूपुरः ॥ ३८॥

घनचर्चितसिन्दूरो घण्टाभीषणभैरवः ।
परापरो बलोऽनन्तश्चतुरश्चक्रबन्धकः ॥ ३९॥

चतुर्मुखमुखाम्भोजचतुरस्तुतितोषणः ।
छलवादी छलश्शान्तश्छान्दसश्छान्दसप्रियः ॥ ४०॥

छिन्नच्छलादिदुर्वादच्छिन्नषट्तन्त्रतान्त्रिकः ।
जडीकृतमहावज्रजम्भारातिर्नतोन्नतः ॥ ४१॥

जगदाधारभूतेशो जगदन्तो निरञ्जनः ।
झर्झरध्वनिसम्युक्तो झङ्काररवभूषणः ॥ ४२॥

झटीविपक्षवृक्षौघझञ्झामारुतसन्निभः ।
प्रवर्णाञ्चितपत्राङ्कः प्रवर्णाद्यक्षरव्रजः ॥ ४३॥

ट वर्णबिन्दुसम्युक्तष्टङ्कारहृतदिग्गजः ।
ठ वर्णपूरद्विदळष्टवर्णाग्रदळाक्षरः ॥ ४४॥

ठ वर्णयुतसद्यन्त्रष्ठ ज चाक्षरपूरकः ।
डमरुध्वनिसम्रक्तो डम्बरानन्दताण्डवः ॥ ४५॥

डण्डण्ढघोषप्रमदाऽऽडम्बरो गणताण्डवः ।
ढक्कापटहसुप्रीतो ढक्कारववशानुगः ॥ ४६॥

ढक्कादिताळसन्तुष्टो टोडिबद्धस्तुतिप्रियः ।
तपस्विरूपस्तपनस्तप्तकाञ्चनसन्निभः ॥ ४७॥

तपस्विवदनाम्भोजकारुण्यस्तरणिद्युतिः ।
ढगादिवादसौहार्दस्थितः सम्यमिनां वरः ॥ ४८॥

स्थाणुस्तण्डुनुतिप्रीतः स्थितिस्थावरजङ्गमः ।
दरहासाननाम्भोजदन्तहीरावळिद्युतिः ॥ ४९॥

दर्वीकराङ्गतभुजो दुर्वारो दुःखदुर्गहा ।
धनाधिपसखो धीरो धर्माधर्मपरायणः ॥ ५०॥

धर्मध्वजो दानशौण्डो धर्मकर्मफलप्रदः ।
पशुपाशहारः शर्वः परमात्मा सदाशिवः ॥ ५१॥

परापरः परशुधृत् पवित्रः सर्वपावनः ।
फल्गुनस्तुतिसन्तुष्टः फल्गुनाग्रजवत्सलः ॥ ५२॥

फल्गुनार्जितसङ्ग्रामफलपाशुपतप्रदः ।
बलो बहुविलासाङ्गो बहुलीलाधरो बहुः ॥ ५३॥

बर्हिर्मुखो सुराराध्यो बलिबन्धनबान्धवः ।
भयङ्करो भवहरो भर्गो भयहरो भवः ॥ ५४॥

भालानलो बहुभुजो भास्वान् सद्भक्तवत्सलः ।
मन्त्रो मन्त्रगणो मन्त्री मन्त्राराधनतोषितः ॥ ५५॥

मन्त्रयज्ञो मन्त्रवादी मन्त्रबीजो महान्महः ।
यन्त्रो यन्त्रमयो यन्त्री यन्त्रज्ञो यन्त्रवत्सलः ॥ ५६॥

यन्त्रपालो यन्त्रहरस्त्रिजगद्यन्त्रवाहकः ।
रजताद्रिसदावासो रवीन्दुशिखिलोचनः ॥ ५७॥

रतिश्रान्तो जितश्रान्तो रजनीकरशेखरः ।
ललितो लास्यसन्तुष्टो लब्धोग्रो लघुसाहसः ॥ ५८॥

लक्ष्मीनिजकरो लक्ष्यलक्षणज्ञो लसन्मतिः ।
वरिष्ठो वरदो वन्द्यो वरदानपरो वशी ॥ ५९॥

वैश्वानराञ्चितभुजो वरेण्यो विश्वतोमुखः ।
शरणार्तिहरः शान्तः शङ्करः शशिशेखरः ॥ ६०॥

शरभः शम्बरारातिर्भस्मोद्धूळितविग्रहः ।
षट्त्रिंशत्तत्त्वविद्रूपः षण्मुखस्तुतितोषणः ॥ ६१॥

षडक्षरः शक्तियुतः षट्पदाद्यर्थकोविदः ।
सर्वज्ञः सर्वसर्वेशः सर्वदाऽऽनन्दकारकः ॥ ६२॥

सर्ववित्सर्वकृत्सर्वः सर्वदः सर्वतोमुखः ।
हरः परमकल्याणो हरिचर्मधरः परः ॥ ६३॥

हरिणार्धकरो हंसो हरिकोटिसमप्रभः ।
देवदेवो जगन्नाथो देवेशो देववल्लभः ॥ ६४॥

देवमौलिशिखारत्नं देवासुरसुतोषितः ।
सुरूपः सुव्रतः शुद्धस्सुकर्मा सुस्थिरः सुधीः ॥ ६५॥

सुरोत्तमः सुफलदः सुरचिन्तामणिः शुभः ।
कुशली विक्रमस्तर्क्कः कुण्डलीकृतकुण्डली ॥ ६६॥

खण्डेन्दुकारकजटाजूटः कालानलद्युतिः ।
व्याघ्रचर्माम्बरधरो व्याघ्रोग्रबहुसाहसः ॥ ६७॥

व्याळोपवीती विलसच्छोणतामरसाम्बकः ।
द्युमणिस्तरणिर्वायुः सलिलं व्योम पावकः ॥ ६८॥

सुधाकरो यज्ञपतिरष्टमूर्तिः कृपानिधिः ।
चिद्रूपश्चिद्घनानन्दकन्दश्चिन्मयनिष्कलः ॥ ६९॥

निर्द्वन्द्वो निष्प्रभो नित्यो निर्गुणो निर्गतामयः ।
व्योमकेशो विरूपाक्षो वामदेवो निरञ्जनः ॥ ७०॥

नामरूपः शमधुरः कामचारी कलाधरः ।
जाम्बूनदप्रभो जाग्रज्जन्मादिरहितोज्ज्वलः ॥ ७१॥

जनकः सर्वजन्तूनां जन्मदुःखापनोदनः ।
पिनाकपाणिरक्रोधः पिङ्गलायतलोचनः ॥ ७२॥

परमात्मा पशूपतिः पावनः प्रमथाधिपः ।
प्रणवः कामदः कान्तः श्रीप्रदो दिव्यलोचनः ॥ ७३॥

प्रणतार्तिहरः प्राणः परञ्ज्योतिः परात्परः ।
तुष्टस्तुहिनशैलाधिवासः स्तोतृवरप्रदः ॥ ७४॥

इष्टकाम्यार्थफलदः सृष्टिकर्ता मरुत्पतिः ।
भृग्वत्रिकण्वजाबालि हृत्पद्माहिमदीधितिः ॥ ७५॥

क्रतुध्वंसी क्रतुमुखः क्रतुकोटिफलप्रदः ।
क्रतुः क्रतुमयः क्रूरदर्पघ्नो विक्रमो विभुः ॥ ७६॥

दधीचिहृदयानन्दो दधीच्यादिसुपालकः ।
दधीचिवाञ्छितसखो दधीचिवरदोऽनघः ॥ ७७॥

सत्पथक्रमविन्यासो जटामण्डलमण्डितः ।
साक्षित्रयीमयश्चारुकलाधरकपर्दभृत् ॥ ७८॥

मार्कण्डेयमुनिप्रीतो मृडो जितपरेतराट् ।
महीरथो वेदहयः कमलासनसारथिः ॥ ७९॥

कौण्डिन्यवत्सवात्सल्यः काश्यपोदयदर्पणः ।
कण्वकौशिकदुर्वासाहृद्गुहान्तर्निधिर्निजः ॥ ८०॥

कपिलाराधनप्रीतः कर्पूरधवलद्युतिः ।
करुणावरुणः काळीनयनोत्सवसङ्गरः ॥ ८१॥

घृणैकनिलयो गूढतनुर्मुरहरप्रियः ।
गणाधिपो गुणनिधिर्गम्भीराञ्चित वाक्पतिः ॥ ८२॥

विघ्ननाशो विशालाक्षो विघ्नराजो विशेषवित् ।
सप्तयज्ञयजः सप्तजिह्वा जिह्वातिसंवरः ॥ ८३॥

अस्थिमालाऽऽविलशिरो विस्तारितजगद्भुजः ।
न्यस्ताखिलस्रजस्तोकविभवः प्रभुरीश्वरः ॥ ८४॥

भूतेशो भुवनाधारो भूतिदो भूतिभूषणः ।
भूतात्मकात्मको भूर्भुवादि क्षेमकरः शिवः ॥ ८५॥

अणोरणीयान्महतो महीयान् वागगोचरः ।
अनेकवेदवेदान्ततत्त्वबीजस्तपोनिधिः ॥ ८६॥

महावनविलासोऽतिपुण्यनामा सदाशुचिः ।
महिषासुरमर्दिन्या नयनोत्सवसङ्गरः ॥ ८७॥

शितिकण्ठः शिलादादि महर्षिनतिभाजनः ।
गिरिशो गीष्पतिर्गीतवाद्यनृत्यस्तुतिप्रियः ॥ ८८॥

अङ्गीकृतः सुकृतिभिः शृङ्गाररसजन्मभूः ।
भृङ्गीताण्डवसन्तुष्टो मङ्गलो मङ्गलप्रदः ॥ ८९॥

मुक्तेन्द्रनीलताटङ्को मुक्ताहारविभूषितः ।
सक्तसज्जनसद्भावो भुक्तिमुक्तिफलप्रदः ॥ ९०॥

सुरूपः सुन्दरः शुक्लधर्मः सुकृतविग्रहः ।
जितामरद्रुमः सर्वदेवराडसमेक्षणः ॥ ९१॥

दिवस्पतिसहस्राक्षवीक्षणावळितोषकः ।
दिव्यनामामृतरसो दिवाकरपतिः प्रभुः ॥ ९२॥

पावकप्राणसन्मित्रं प्रख्यातोर्ध्वज्वलन्महः ।
प्रकृष्टभानुः पुरुषः पुरोडाशभुगीश्वरः ॥ ९३॥

समवर्ती पितृपतिर्धर्मराट्शमनो यमी ।
पितृकाननसन्तुष्टो भूतनायकनायकः ॥ ९४॥

नयान्वितः सुरपतिर्नानापुण्यजनाश्रयः ।
नैरृत्यादि महाराक्षसेन्द्रस्तुतयशोऽम्बुधिः ॥ ९५॥

प्रचेताजीवनपतिर्धृतपाशो दिगीश्वरः ।
धीरोदारगुणाम्भोधिकौस्तुभो भुवनेश्वरः ॥ ९६॥

सदानुभोगसम्पूर्णसौहार्दः सुमनोज्ज्वलः ।
सदागतिः साररसः सजगत्प्राणजीवनः ॥ ९७॥

राजराजः किन्नरेशः कैलासस्थो धनप्रदः ।
यक्षेश्वरसखः कुक्षिनिक्षिप्तानेकविस्मयः ॥ ९८॥

ईशानः सर्वविद्यानामीश्वरो वृषलाञ्छनः ।
इन्द्रादिदेवविलसन्मौलिरम्यपदाम्बुजः ॥ ९९॥

विश्वकर्माऽऽश्रयो विश्वतोबाहुर्विश्वतोमुखः ।
विश्वतः प्रमदो विश्वनेत्रो विश्वेश्वरो विभुः ॥ १००॥

सिद्धान्तः सिद्धसङ्कल्पः सिद्धगन्धर्वसेवितः ।
सिद्धितः शुद्धहृदयः सद्योजाताननश्शिवः ॥ १०१॥

श्रीमयः श्रीकटाक्षाङ्गः श्रिनामा श्रीगणेश्वरः ।
श्रीदः श्रीवामदेवास्यः श्रीकण्ठः श्रीप्रियङ्करः ॥ १०२॥

घोराघध्वान्तमार्ताण्डो घोरेतरफलप्रदः ।
घोरघोरमहायन्त्रराजो घोरमुखाम्बुजः ॥ १०३॥

ततः सुषिर सुप्रीत तत्त्वाद्यागमजन्मभूः ।
तत्त्वमस्यादि वाक्यार्थस्तत्पूर्वमुखमण्डितः ॥ १०४॥

आशापाशविनिर्मुक्तः शेषभूषणभूषितः ।
दोषाकरलसन्मौलिरीशानमुखनिर्मलः ॥ १०५॥

पञ्चवक्त्रो दशभुजः पञ्चाशद्वर्णनायकः ।
पञ्चाक्षरयुतः पञ्चः पञ्च पञ्च सुलोचनः ॥ १०६॥

वर्णाश्रमगुरुः सर्ववर्णाधारः प्रियङ्करः ।
कर्णिकारार्क दुत्तूर पूर्णपूजाफलप्रदः ॥ १०७॥

योगीन्द्रहृदयानन्दो योगी योगविदां वरः ।
योगध्यानादिसन्तुष्टो रागादिरहितो रमः ॥ १०८॥

भवाम्भोधिप्लवो बन्धमोचको भद्रदायकः ।
भक्तानुरक्तो भव्यः सद्भक्तिदो भक्तिभावनः ॥ १०९॥

अनादिनिधनोऽभीष्टो भीमकान्तोऽर्जुनो बलः ।
अनिरुद्धः सत्यवादी सदानन्दाश्रयोऽनघः ॥ ११०॥

आलयः सर्वविद्यानामाधारः सर्वकर्मणाम् ।
आलोकः सर्वलोकानामाविर्भावो महात्मनाम् ॥ १११॥

इज्यापूर्तेष्टफलदः इच्छाशक्त्यादि संश्रयः ।
इनः सर्वामराराध्य ईश्वरो जगदीश्वरः ॥ ११२॥

रुण्डपिङ्गलमध्यस्थो रुद्राक्षाञ्चितकन्धरः ।
रुण्डिताधारभक्त्यादिरीडितः सवनाशनः ॥ ११३॥

उरुविक्रमबाहुल्य उर्व्याधारो धुरन्धरः ।
उत्तरोत्तरकल्याण उत्तमोत्तमनायकः ॥ ११४॥

ऊरुजानुतडिद्वृन्द ऊर्ध्वरेता मनोहरः ।
ऊहितानेकविभव ऊहिताम्नायमण्डलः ॥ ११५॥

ऋषीश्वरस्तुतिप्रीतो ऋषिवाक्यप्रतिष्ठितः ।
ऋगादि निगमाधारो ऋजुकर्मा मनोजवः ॥ ११६॥

रूपादि विषयाधारो रूपातीतो ऋषीश्वरः ।
रूपलावण्यसम्युक्तो रूपानन्दस्वरूपधृत् ॥ ११७॥

लुलितानेकसङ्ग्रामो लुप्यमानरिपुव्रजः ।
लुप्तक्रूरान्धको वारो लूकाराञ्चितयन्त्रधृत् ॥ ११८॥

लूकारादि व्याधिहरो लूस्वराञ्चितयन्त्रयुक् ।
लूशादि गिरिशः पक्षः खलवाचामगोचरः ॥ ११९॥

एष्यमाणो नतजन एकच्चितो दृढव्रतः ।
एकाक्षरमहाबीज एकरुद्रोऽद्वितीयकः ॥ १२०॥

ऐश्वर्यवर्णनामाङ्ग ऐश्वर्यप्रकरोज्ज्वलः ।
ऐरावणादि लक्ष्मीश ऐहिकामुष्मिकप्रदः ॥ १२१॥

ओषधीशशिखारत्न ओङ्काराक्षरसम्युतः ।
ओकः सकलदेवानामोजोराशिरजाद्यजः ॥ १२२॥

औदार्यजीवनपर औचित्यमणिजन्मभूः ।
उदासीनैकगिरिश उत्सवोत्सवकारणौ ॥ १२३॥

अङ्गीकृतषडङ्गाङ्ग अङ्गहारमहानटः ।
अङ्गजाङ्गजभस्माङ्गो मङ्गलायतविग्रहः ॥ १२४॥

कः किं त्वदनु देवेशः कः किन्नु वरदप्रदः ।
कः किन्नु भक्तसन्तापहरः कारुण्यसागरः ॥ १२५॥

स्तोतव्यः स्तोतुमिच्छूनां मन्तव्यः शरणार्थिनाम् ।
ध्येयो ध्यानैकनिष्ठानां धाम्नः परमपूरकः ॥ १२६॥

भगनेत्रहरः पूतः साधुदूषकभूषणः ।
भद्रकाळिमनोराजो हंसः सत्कर्मसारथिः ॥ १२७॥

सभ्यः साधुः सभारत्नं सौन्दर्यगिरिशेखरः ।
सुकुमारः सौख्यकरः सहिष्णुः साध्यसाधनम् ॥ १२८॥

निर्मत्सरो निष्प्रपञ्चो निर्लोभो निर्गुणो नयः ।
वीताभिमानो निर्जातो निरातङ्को निरञ्जनः ॥ १२९॥

कालत्रयः कलिहरो नेत्रत्रयविराजितः ।
अग्नित्रयनिभाङ्गश्च भस्मीकृतपुरत्रयः ॥ १३०॥

कृतकार्यो व्रतधरो व्रतनाशः प्रतापवान् ।
निरस्तदुर्विधिर्निर्गताशो निर्वाणनीरधिः ॥ १३१॥

निधानं सर्वहेतूनां निश्चितार्थेश्वरेश्वरः ।
अद्वैतशाम्भवमहो सनिर्व्याजोर्ध्वलोचनः ॥ १३२॥

अपूर्वपूर्वः परमः सपूर्वः पूर्वपूर्वदिक् ।
अतीन्द्रियः सत्यनिधिरखण्डानन्दविग्रहः ॥ १३३॥

आदिदेवः प्रसन्नात्मा आराधकजनेष्टदः ।
सर्वदेवमयः सर्वः जगद्व्यासः सुलक्षणः ॥ १३४॥

सर्वान्तरात्मा सदृशः सर्वलोकैकपूजितः ।
पुराणपुरुषः पुण्यः पुण्यश्लोकः सुधामयः ॥ १३५॥

पूर्वापरज्ञः पुरजित् पूर्वदेवामरार्चितः ।
प्रसन्नदर्शितमुखः पन्नगावळिभूषणः ॥ १३६॥

प्रसिद्धः प्रणताधारः प्रलयोद्भूतकारणम् ।
ज्योतिर्मयो ज्वलद्दंष्ट्रो ज्योतिर्मालावळीवृतः ॥ १३७॥

जाज्ज्वल्यमानो ज्वलननेत्रो जलधरद्युतिः ।
कृपाम्भोराशीरम्लानो वाक्यपुष्टोऽपराजितः ॥ १३८॥

क्षपाकरार्ककोटिप्रभाकरः करुणाकरः ।
एकमूर्तिस्त्रिधामूर्तिर्दिव्यमूर्तिरनाकुलः ॥ १३९॥

अनन्तमूर्तिरक्षोभ्यः कृपामूर्तिः सुकीर्तिधृत् ।
अकल्पितामरतरुरकामितसुकामधुक् ॥ १४०॥

अचिन्तितमहाचिन्तामणिर्देवशिखामणिः ।
अतीन्द्रियोऽजितः प्रांशुर्ब्रह्मविष्ण्वादिवन्दितः ॥ १४१॥

हंसो मरीचिर्भीमश्च रत्नसानुशरासनः ।
सम्भवोऽतीन्द्रियो वैद्यो विश्वरूपी निरञ्जनः ॥ १४२॥

वसुदः सुभुजो नैकमायोऽव्ययः प्रमादनः ।
अगदो रोगहर्ता च शरासनविशारदः ॥ १४३॥

मायाविश्वादनो व्यापी पिनाककरसम्भवः ।
मनोवेगो मनोरूपी पूर्णः पुरुषपुङ्गवः ॥ १४४॥

शब्दादिगो गभीरात्मा कोमलाङ्गः प्रजागरः ।
त्रिकालज्ञो मुनिः साक्षी पापारिः सेवकप्रियः ॥ १४५॥

उत्तमः सात्त्विकः सत्यः सत्यसन्धो निराकुलः ।
रसो रसज्ञो सारज्ञो लोकसारो रसात्मकः ॥ १४६॥

पूषादन्तभिदव्यग्रो दक्षयज्ञनिषूदनः ।
देवाग्रणीः शिवध्यानतत्परः परमः शुभः ॥ १४७॥

जयो जयादिः सर्वाघशमनो भवभञ्जनः ।
अलङ्करिष्णुरचलो रोचिष्णुर्विक्रमोत्तमः ॥ १४८॥

शब्दगः प्रणवो वायुरंशुमाननिलतापहृत् । वायुरंशुमाननल
निरीशो निर्विकल्पश्च चिद्रूपो जितसाध्वसः ॥ १४९॥

उत्तारणो दुष्कृतिहा दुर्धर्षो दुस्सहोऽभयः ।
नक्षत्रमाली नाकेशः स्वाधिष्ठानषडाश्रयः ॥ १५०॥

अकायो भक्तकायस्थः कालज्ञानी महानटः ।
अंशुः शब्दपतिर्योगी पवनः शिखिसारथिः ॥ १५१॥

वसन्तो माधवो ग्रीष्मः पवनः पावनोऽमलः ।
वारुर्विशल्यचतुरः शिवचत्वरसंस्थितः ॥ १५२॥

आत्मयोगः समाम्नायतीर्थदेहः शिवालयः ।
मुण्डो विरूपो विकृतिर्दण्डो दान्तो गुणोत्तमः ॥ १५३॥

देवासुरगुरुर्देवो देवासुरनमस्कृतः ।
देवासुरमहामन्त्रो देवासुरमहाश्रयः ॥ १५४॥

दिवोऽचिन्त्यो देवताऽऽत्मा ईशोऽनीशो नगाग्रगः ।
नन्दीश्वरो नन्दिसखो नन्दिस्तुतपराक्रमः ॥ १५५॥

नग्नो नगव्रतधरः प्रलयाकाररूपधृत् ।
सेश्वरः स्वर्गदः स्वर्गः स्वरः सर्वमयः स्वनः ॥ १५६॥

बीजाध्यक्षो बीजकर्ता धर्मकृद्धर्मवर्धनः ।
दक्षयज्ञमहाद्वेषी विष्णुकन्धरपातनः ॥ १५७॥

धूर्जटिः खण्डपरशुः सकलो निष्कलोऽसमः ।
मृडो नटः पूरयिता पुण्यक्रूरो मनोजवः ॥ १५८॥

सद्भूतः सत्कृतः शान्तः कालकूटो महानघः ।
अर्थानर्थो महाकायो नैककर्मसमञ्जसः ॥ १५९॥

भूशयो भूषणो भूतिर्भूषणो भूतवाहनः ।
शिखण्डी कवची शूली जटी मुण्डी च कुण्डली ॥ १६०॥

मेखली मुसली खड्गी कङ्कणीकृतवासुकिः ॥ १६१॥

उत्तरभागम् ।

एतत्सहस्रनामाङ्कं वीरभद्रस्य कीर्तनम् ।
एकैकाक्षरमाहात्म्यं महापातकनाशनम् ॥ १६२॥

महाव्याधिहरं मृत्युदारिद्र्यतिमिराञ्जनम् ।
महासंसारजलधिमग्नोत्तारणनाविकः ॥ १६३
धर्मार्थकाममोक्षाणां निजगेहं निरर्गलम् ।
कर्मभक्तिचिदानन्दं कन्दकारणकन्दकम् ॥ १६४॥

रसं रसायनं दिव्यं नामामृतरसं नरः ।
शृणुयाद्यः स्मरन्योऽपि सर्वपापैः प्रमुच्यते ॥ १६५॥

अग्निष्टोमस्य यज्ञस्य वाजपेयशतस्य च ।
कन्यादानसहस्रस्य यत्फलं लभते नरः ॥ १६६॥

तत्फलङ्कोटिगुणितं नामैकस्य सकृज्जपात् ।
आयुरारोग्यसौभाग्यं पुत्रपौत्रप्रवर्धनम् ॥ १६७॥

ऐहिकामुष्मिकभयच्छेदनं सुखसाधनम् ।
कुष्ठापस्मारपैशाचचेष्टादिरुजनाशकम् ॥ १६८॥

अश्मरीं वातशीतोष्णं ज्वरं माहेश्वरीज्वरम् ।
त्रिदोषजं सन्निपातं कुक्षिनेत्रशिरोव्यथाम् ॥ १६९॥

मृत्युदारिद्र्यजन्मादि तीव्रदुःखनिवारणम् ।
मारणं मोहनं चैव स्तम्भनोच्चाटनं तथा ॥ १७०॥

विद्वेषणं कर्षणं च कुटिलं वैरिचेष्टितम् ।
विषशस्त्रोरगव्याघ्रभयं चोराग्निशत्रुजम् ॥ १७१॥

भूतवेतालयक्षादि ब्रह्मराक्षसजं भयम् ।
शाकिन्यादि भयं भैरवोद्भवं बहुद्विट्भयम् ॥ १७२॥

त्यजन्त्येव सकृत् स्तोत्रं यः स्मरेद्भीतमानसः ।
यः स्मरेत् वीरभद्रेति लभेत् सत्यं श्रियं जयम् ॥ १७३॥

वीरभद्रस्य नाम्नां यत् सहस्रं सर्वसिद्धिदम् ।
वज्रपञ्जरमित्युक्तं विष्णुना प्रभविष्णुना ॥ १७४॥

करचिन्तामणिनिभं स्वैरकामदगोसमम् ।
स्वाङ्गणस्थामरतरुसमानमसमोपमम् ॥ १७५॥

एककालं द्विकालं वा त्रिकालं नित्यमेव वा ।
यः पठेद्वीरभद्रस्य स्तोत्रं मन्त्रमिदं नरः ॥ १७६॥

इह भुक्त्वाखिलान्भोगानन्ते शिवपदं व्रजेत् ॥ १७७॥

**॥ इति श्री वीरभद्र सहस्रनामस्तोत्रं सम्पूर्णम् ॥**

## श्री अघोर वीरभद्र प्रलयकाल हूंकार वीरभद्र मालामहामन्त्रः

श्री अघोर वीरभद्र प्रलय काल हूंकार वीरभद्र माला महामन्त्रस्य ।
संहार रुद्र ऋषिः । जगती छन्दः ।
श्री अघोरप्रलयकालहुंकारवीरभद्रो देवता ।
ह्रां बीजं । ह्रीं शक्तिः । ह्रूं कीलकं

श्री अघोरप्रलयकालहुंकारविरभद्रप्रसादसिद्ध्यर्थे धर्मार्थकाममोक्षार्थे इष्टकाम्यार्थसिध्यर्थे यक्षराक्षसगरुडगन्धर्वकिन्नरकिपुरुषभूतप्रेतपिशाचब्रह्मराक्षस आकर्षणोच्चाटनार्थे जपे विनियोगः ।

### कर न्यासः –

ॐ अतिक्रूराय अङ्गुष्ठाभ्यां नमः ।
क्रूराय तर्जनीभ्यां नमः ।
रुद्राय मध्यमाभ्यां नमः ।
रुद्रपुत्राय अनामिकाभ्यां नमः ।
सकलभूतप्रेतपिशाचब्रह्मराक्षसदहनाय कनिष्ठिकाभ्यां नमः ।
श्रीअघोरवीरभद्राय करतलकरपृष्ठाभ्यां नमः ।

### अङ्ग न्यासः –

ॐ अतिक्रूराय हृदयाय नमः ।
क्रूराय शिरसे स्वाहा ।
रुद्राय शिखायै वषट् ।
रुद्रपुत्राय कवचाय हुं ।
सकलभूतप्रेतपिशाचब्रह्मराक्षसदहनाय नेत्रत्रयाय वौषट् ।
श्रीअघोरवीरभद्राय अस्त्राय फट् ।

ॐ भूर्भुवस्वः इति दिग्बन्धः ।

## ध्यानम् –

सजलजलदनिलं चन्द्रमौलिं त्रिनेत्रम्
समयविजयटङ्कं चारुचर्मासि अस्त्रम् ।
घणघणमणिघोषैः कम्पयन्तं निलिम्पा–
नचिदविमितभद्रं वीरभद्रं प्रपद्ये ॥

नीलं नीलाभवर्णं विकसितवदनं नीलकण्ठं त्रिणेत्रं
कालं कालाग्निरुद्रं करतलकमलं खड्गखेटे कपालम् ।
भीमं भीमाट्टाहासं त्रिभुवनविजयं वीरभद्रं प्रसन्नं
वन्देशं शङ्कराख्यं सकलदानव प्राणसंहारवीरम् ॥

## पञ्चपूजा –

लं पृथिव्यात्मने गन्धं कल्पयामि ।
हं आकाशात्मने पुष्पाणि कल्पयामि ।
यं वाय्वात्मने धूपं कल्पयामि ।
रं अग्न्यात्मने दीपं कल्पयामि ।
वं अमृतात्मने नैवेद्यं कल्पयामि ।
सं सर्वात्मने ताम्बूलादि समस्तोपचारान् कल्पयामि ।

**मन्त्रः –**

ॐ विं ॐ नमो भगवते श्री अघोरवीरभद्राय त्रिनेत्रमुकुटाय चन्द्रकलाधराय जटाजूटमणिकुण्डलभूषणाय महाभयङ्कर स्वरूपाय महाप्रलयकालस्वरूपाय युगयुगान्तकालप्रचण्डध्वंसकाय खड्वाङ्ग कपाल पाश त्रिशूल डमरुक करवालफलखड्ग धनुर्हस्तायानन्तकर्णकुण्डलाय वासुकिकर्णाभरणाय तक्षकहाराय कार्कोटकयज्ञोपवीताय शङ्खपालघटिकसूत्राय पद्मपादपुरिकटकाय महापद्मवन्दितपादयुगलाय सर्वगुणडम्बरविनोदानाय आचारप्रतिपालनायानाचारसंहारणाय अद्भुतशक्तिप्रदाय मौक्तिकमुक्ताभरणाय दक्षमखविध्वंशनाय सोमसूर्याग्निलोचनाय ॐ श्रीं अघोरप्रलयकालहुंकार अघोर वीरभ्द्रब्रह्म गृहं बन्धय बन्धय विष्णुगृहं बन्धय बन्धय रुद्रगृहं बन्धय बन्धय केतुगृहं बन्धय बन्धय इन्द्रदशगृहं बन्धय बन्धय अग्निदशगृहं बन्धय बन्धय यमदशगृहं बन्धय बन्धय नैऋतिगशगृहं बन्धय बन्धय वरुणदशगृहं बन्धय बन्धय वायुदशगृहं बन्धय बन्धय कुबेरदशगृहं बन्धय बन्धय ईशानदशगृहं बन्धय बन्धय आकाशदशगृहं बन्धय बन्धय अवान्तरदशगृहं बन्धय बन्धय पातालदशगृहं बन्धय बन्धय यक्षगणं बन्धय बन्धय राक्षस गणं बन्धय बन्धय गन्धर्वगृहं बन्धय बन्धय किन्नरगणं बन्धय बन्धय किंपुरुषगणं बन्धय बन्धय भूतगणं बन्धय बन्धय प्रेतगणं बन्धय बन्धय पिशाचगणं बन्धय बन्धय ब्रह्मराक्षसगणं बन्धय बन्धय जटिग्रहं बन्धय बन्धय कुम्भिनीगृहं बन्धय बन्धय शुभिनिगृहं बन्धय बन्धय बालगृहं बन्धय बन्धय शाकिनीगृहं बन्धय बन्धय डाकिनीगृहं बन्धय बन्धय हाकिनीगृहं बन्धय बन्धय मोहिनीगृहं बन्धय बन्धय कामिनीगृहं बन्धय बन्धय वीरगृहं बन्धय बन्धय शूरगृहं बन्धय बन्धय लण्डिगृहं बन्धय बन्धय चण्डीगृहं बन्धय बन्धय स्मशानक्काटेरिग्रहं बन्धय बन्धय जलकाट्टेरिग्रहं बन्धय रक्तक्काटेरिगृहं बन्धय शूट्टेरिगृहं बन्धय बन्धय नाट्टेरिगृहं बन्धय कन्नियेरि गृहं बन्धय काञ्चिलेरिगृहं बन्धय नाविलेरिगृहं बन्धय मुट्टेरिगृहं बन्धय मुनियेरिगृहं बन्धय चतुष्षष्टिमन्त्रस्थापितग्रहान् बन्धय जटामुनिग्रहं बन्धय एवलमुनिग्रहं बन्धय श्मशानवासुकिगृहं बन्धय नानावर्णगृहं बन्धय नानाजातिग्रहं बन्धय नानाजातिगृहं बन्धय सर्वदुष्टग्रहान् बन्धय बन्धय ॐ अघोरप्रलयकालहाङ्कारसंहारवीरभद्राय ब्रह्माण्डरोमकूपविलम्बिताय लोकैकनाथाय त्रैलोक्यडम्बराय ॐ विं अघोरप्रलयकालहाङ्कार संहारवीरभद्र आगच्छ आगच्छ

आकर्षय आकर्षय आवेशय आवेशय अवतारय ललललल लिलिलिलिलि लुलुलुलुलु अघोरप्रलयकालवीरभद्र शीघ्रं शीघ्रं आकर्षय आकर्षय आवेशय आवेशय स्तम्भय स्तम्भय मोहय मोहय भ्रामय भ्रामय भीषय भीषय पेषय आपूरय पारु फारु पोक ह्रां ह्रीं ह्रूं श्रीं अघोरप्रलयकालहाङ्कार अघोरवीरभद्राय नमस्ते नमस्ते स्वाहा ।

## अङ्ग न्यासः –

ॐ अतिक्रूराय हृदयाय नमः ।
क्रूराय शिरसे स्वाहा ।
रुद्राय शिखायै वषट् ।
रुद्रपुत्राय कवचाय हुं ।
सकलभूतप्रेतपिशाचब्रह्मराक्षसदहनाय नेत्रत्रयाय वौषट् ।
श्रीअघोरवीरभद्राय अस्त्राय फट् ।

ॐ भूर्भुवस्वरों इति दिग्विमोघः ।

## ध्यानम् –

सजलजलदनिलं चन्द्रमौलिं त्रिनेत्रम्
समयविजयटङ्कं चारुचर्मासि अस्त्रम् ।
घणघणमणिघोषैः कम्पयन्तं निलिम्पा–
नचिदविमितभद्रं वीरभद्रं प्रपद्ये ॥

नीलं नीलाभवर्णं विकसितवदनं नीलकण्ठं त्रिणेत्रं
कालं कालाग्निरुद्रं करतलकमलं खड्गखेटे कपालम् ।
भीमं भीमाट्टाहासं त्रिभुवनविजयं वीरभद्रं प्रसन्नं
वन्देशं शङ्कराख्यं सकलदानव प्राणसंहारवीरम् ॥

## पञ्चपूजा –

लं पृथिव्यात्मने गन्धं कल्पयामि ।
हं आकाशात्मने पुष्पाणि कल्पयामि ।
यं वाय्वात्मने धूपं कल्पयामि ।
रं अग्न्यात्मने दीपं कल्पयामि ।
वं अमृतात्मने नैवेद्यं कल्पयामि ।
सं सर्वात्मने ताम्बूलादि समस्तोपचारान् कल्पयामि ।

எண்ணா யிரத்தாண்டு யோகம் இருக்கினும்
கண்ணார் அமுதினைக் கண்டறி வாரில்லை
உண்ணாடிக் குள்ளே ஒளியுற நோக்கினால்
கண்ணடி போலக் கலந்துநின் றானே

- திருமந்திரம் **603**



**Eight thousand years of yOgA dear**
**Might not take you to Her near**
**Light you seek within you clear**
**Right like mirror you merge full gear**